# Some opinions about the Author.

---

**Late R. RAJARAJAVARMA,** Professor of Sanskrit, and Dravidian languages, Trivandrum :—

D. T. Tatachariyar of Tanjore paid me a few visits and read to me some of his poetical productions. The young pandit has written many a lyric poem and also a few panegyrics of certain Rajas and Chiefs. He writes chaste, elegant and idiomatic sanskrit. Both in diction and conception of ideas he is far above the level of a modern versifier. He has very favourably impressed me as a budding poet of extraordinary abilities and I hope his precocious genious will receive due appreciation in the hands of Rajas and Maharajas.

Trivandrum }
5—2—1913. }

---

**M R.Ry S. Kuppuswami Sastriar Avl.** M. A., F. M. U., *Professor of Sanskrit and Comparative Philology, Presidency College. and Curator,* Government Oriental Manuscripts Library, MADRAS :—

......He is a remarkably intelligent Pandit of exceptionally high attainments in Sanskrit. He has acquired

a specialistic proficiency, up to the highest standard, in Nyaya and Mimamsa and he possesses a sound knowledge of Sahitya, Alankara and Vyakarana. His oral exposition in Sanskrit and in Tamil has been found to be strikingly lucid, impressive and attractive and his Sanskrit composition in prose and verse is very good and always exhibits such characteristically good features as would never fail to command the apprecia-tion and esteem of all discerning critics....... I have no hesitation in saying that of all the Siromanis that have been turned out till now by the Madras University, since the first Oriental Titles Examination held in April 1915, Mr. D. Tirumalaitatachari is, in my opinion, the best and the ablest man, in respect of Pandit erudi-ion and depth and likewise on the side of the modern methods of scientific study and criticism.

---

M. R.Ry S. VEDANTA AIYANGAR avl. M A., L.T., *Principal Board Sanskrit College*, Tiruvadi, *Tanjore* :- ......Considering his high specialistic proficiency in Nyaya, Mimamsa, and Vedanta with a good insight in the other Sastras and Belles Lettres, his powers of Sanskrit elocution and his critical acumen, I am glad, I should consider that he is one of the rarest and best productions which this institution should always be proud of.

---



श्रीः ।

# कपीनामुपवासः ।



पुरा कदाचित् कपिसार्वभौमः
कश्चित्समाहूय जनान् स्वकीयान् ।
प्रवर्त्य सम्मेलनमात्मनीना-
मुवाच वाचं वदतां वरेण्यः ॥ १ ॥

ज्ञातं हि वो वानरवंशवृद्धाः
प्राञ्चो यदस्मत्कुलजा महान्तः ।
शौर्येण वीर्येण च विद्यया च
लोकत्रयेऽपि प्रथिता बभूवुः ॥ २ ॥

प्रियोपलम्भाय वृतः सहायो
यः कोसलेन्द्रस्य कुमारकेण ।
कस्यात्र लोके विदितो न जन्तोः
सुग्रीवनामा स कपिप्रवीरः ॥ ३ ॥

कैलासकम्पप्रथितप्रभावं
लङ्केश्वरं यः क्रिमिवच्चकर्ष ।
निलीय विद्धो रघुनन्दनेन
कस्मिन् कुलेऽजायत सैष वाली ॥४ ॥

उदन्वदुल्लङ्घनलब्धवर्णो
लङ्कापुरीदाहलसत्प्रतापः ।
श्रीमान् नवव्याकरणप्रवीणो
जज्ञे हनूमान् स च कुत्र वंशे ॥ ५ ॥

निबन्धितोऽब्धौ रघुपुङ्गवेन
यस्याख्यया सेतुरिह प्रसिद्धः ।
आचक्ष्वमाहो कपिवंशवृद्धाः
सोऽयं नलः कुत्र बभूव वंशे ॥ ६ ॥

किमद्य सर्वैर्गणितैर्महद्भि-
र्ये नः कुलालंकृतयो बभूवुः ।
विवक्षितं किञ्चिदिदं वदामि
विधाय कर्णे विमृशन्तु सन्तः ॥ ७ ॥

किन्तावदस्मासु न विद्यते य-
न्मनुष्यजातेरवरा भवेम।
किंवा मनुष्येष्वधिकं चकास्ति
यतः प्रकृष्येत मनुष्यवर्गः ॥ ८ ॥

इतीरयित्वा गिरमर्थयुक्तां
तूष्णीं भवन् वानरवावदूकः।
वाग्मित्वदर्पोद्धतधीरमन्दं
सभां समन्तात् क्षणमालुलोके ॥ ९ ॥

स्वोत्कर्षवाचा विकसन्मुखानां
प्लवङ्गमानां विविधाङ्गहारैः ॥
प्रोत्साहितोऽसौ प्लवगाधिराजः
प्रीतः पुनर्धीरमुवाच वाचम् ॥ १० ॥

तदद्य मान्याः परिचिन्तयध्वं
धर्मेषु शास्त्रैरुपदर्शितेषु।
मनुष्यवर्गस्य यथाऽधिकार-
स्तथा किमस्मत्कुलजस्य न स्यात् ॥ ११ ॥

चिरप्रलीनोऽपि स सम्प्रदायो
नूनं भवद्भिः परिपालनीयः ।
धर्मव्यपाये हि मृगत्ववादः
प्रवर्तितोऽस्मासु भवेन्निरूढः ॥ १२ ॥

तात्कालिकं क्लेशमतः सहद्भि-
र्निधीयतां धीः स्थिरधर्ममार्गे ।
एकादशी श्वो भविता तदानी-
मुपोष्य धर्मं प्रथमं कुरुध्वम् ॥ १३ ॥

शाखामृगाणामिति चक्रवर्ती
निषिच्य कर्णेष्वमृतं कपीनाम् ।
सन्तोषचिह्नैर्बहुधोपलक्ष्यै-
स्तेषां प्रहृष्यन् विरतो बभूव ॥ १४ ॥

कीच्कारसान्द्रां प्लुतभेददृश्यां
तस्यार्हणां प्रेममयीं प्रवाचः ।
कृत्वोपवासे कृतनिश्चयास्ते
मुदा ययुर्मानुषसाम्यहृष्टाः ॥ १५ ॥

अथ प्रभाते किल जागरित्वा
नदीजलस्नानपवित्रिताङ्गाः।
निधाय रामं हृदि तेऽभिरामं
सङ्कल्पयामासुरुपोषणाय ॥ १६ ॥

अथ क्षणार्धं निभृतं स्थितानां
परस्परप्रेक्षणतत्पराणाम्।
हृदीव गात्रेऽपि बभूव लौल्यं
प्रभुः स्वभावं व्यतिवर्तितुं कः ॥ १७ ॥

विधाय जृम्भां व्यवधूय हस्तं
प्रसार्य पादं परिवर्त्य गात्रम्।
आचुम्ब्य पुच्छाग्रमसोढकण्डू-
रन्ते कपिः कोऽपि बिभेद मौनम् ॥ १८ ॥

असंशयं सम्प्रति पालनीयं
व्रतं महापुण्यमिदं महान्तः।
तथाऽपि जम्बूद्रुममूलभाजां
श्वः पारणा नः सुकरेति भाति ॥ १९ ॥

इत्येवमुक्तं स्वगुणानुरूपं
कीशेन तेन प्रतिमोदमानाः ।
स्थिरासनक्लेशविनाशतोषात्
कीशाः परे तुल्यमिति प्रणेदुः ॥ २० ॥

तथाऽस्तु को दोष इह स्थिताश्चेद्-
व्रतोपवासश्रमपीडिताङ्गाः ।
वृक्षान् प्रति प्रातरितः प्रयातुं
प्रायेण शक्ता न वयं भवेम ॥ २१ ॥

इत्थं विनिश्चित्य तटात्तटिन्याः
स्वच्छन्दमुत्प्लुत्य विचेष्टमानाः ।
आसाद्य जम्बूद्रुममूलदेश-
माबध्य पङ्क्तिं हरयो निषेदुः ॥ २२ ॥

तथा स्थितास्ते क्षणिकानुबद्धै-
रुद्वीक्षणैर्विष्वगवेक्षणैश्च ।
कण्डूयनैश्शीघ्रतमैश्च कांश्चित्
क्षणान् कथञ्चित् क्षपयांबभूवुः ॥ २३ ॥

अथोत्थितः कश्चिदलुप्तधैर्यः
कपिः कपीन्द्रान् कथयाम्बभूव ।
आरुह्य वृक्षं यदि संविशेम
का नः क्षतिस्तत्र भविष्यतीति ॥ २४ ॥

व्रतस्य हानिर्नहि काचिदस्ति
तत्रेत्युरीकृत्य तदप्यमी द्राक् ।
आरुह्य वृक्षं विततासु तस्थुः
शाखासु तस्य व्रतिनः कपीन्द्राः ॥ २५ ॥

तत्रैकतो जोषमवास्थितानां
निर्बन्धजातद्विगुणश्रमाणाम् ।
अभक्षणध्याननिरन्तराणां
क्षणः क्षणोऽदृश्यत कल्पदीर्घः ॥ २६ ॥

वातेरिताभ्यो द्रुमशाखिकाभ्यः
सशब्दपातीनि रसोल्बणानि ।
फलानि दृश्यानि निरीक्ष्य निर्य-
दन्तोदकानां क्षुभितं मनोऽभूत् ॥ २७ ॥

फलानुपातिस्वमनोरथेषु
ह्रीयन्त्रणान्मौनमभञ्जयत्सु ।
सर्वेषु कश्चित् प्रतिलभ्य धैर्यं
सर्वाशयं स्वाशयवज्जगाद ॥ २८ ॥

प्रकल्पिता सर्वविदा विधात्रा
कपोलयोरस्ति हि भस्त्रिका नः ।
तां पूरयेमाद्य फलैरदुष्टै-
र्नास्तां फलान्वेषणसङ्कटं श्वः ॥ २९ ॥

तथेत्यथोत्प्लुत्य हरिप्रवीराः
शाखोपशाखासु परिभ्रमन्तः ।
फलैरशुष्कैः परिपाकरम्यै-
रपूरयन्नाननकन्दराणि ॥ ३० ॥

ततः परं यत् करणीयमत्र
न किञ्चिदन्योन्यनिवेद्यमासीत् ।
तस्माच्चरन्तः कपयो यथेच्छं
जह्रुर्लिखन्तीं किल लेखिनीं नः ॥ ३१ ॥

